# रुणावज्रायुधम् ।

( नाटकम् )



संशोधकः—

## मुनि चतुरविजयः ।



प्रकाशिका—

श्री [illegible] नन्द-सभा

श्रीजैन-आत्मानन्द-ग्रंथरत्नमाला-षट्पञ्चाश रत्नम्

श्रीबालचन्द्रसूरिविरचितं

# करुणावज्रायुधं नाटकम्



पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयमुनिपुङ्गवा-
न्तेवासिमुनिचतुरविजयेन संशोधितम् ।

तच्च

प्रवर्त्तकान्तिषन्मुनिचतुरविजयोपदिष्ट—पत्तनपत्तननि-
वासि—श्रीमालिज्ञातीय—शाह—भूषणचन्द्रात्मज-
क्षेमचन्द्र—द्रव्यसाहाय्येन

प्रसिद्धकर्त्री

भावनगरस्था श्रीजैनआत्मानन्दसभा ।

[redacted]र संवत् २४४३.
[redacted]त्म सँवतू २१.

विक्रम सँवत् १९७३.
ईसवी सन् १९१६.

# ॥ प्रास्ताविकनिवेदनम् ॥



अस्य सुललितवाक्यरचनाचातुर्येण जनमनोरञ्जकस्य सुप्रसिद्धपरोपकृतिसार-भूतकरुणाप्राधान्यस्य करुणावज्रायुधाभिधेयस्य नाटकस्य के कविकोटिकोटीराः प्रणेतार इत्येतद्विषयस्य निर्णयस्तु प्रस्तुतप्रबन्धप्रान्तगतस्य—

" भद्रश्रीहरिभद्रसूरिसुगुरोः षट्तर्कविद्याविदः
शिष्यः श्रीश्रुतदेवतासुत इति ख्यातः प्रबन्धं व्यधात् ।
श्रीवज्रायुधचक्रवर्तिचरितव्याहारवैतालिकं
विद्वत्कर्णरसारसायनममुं श्रीबालचन्द्रः कविः ॥"

इत्येतत्पद्यस्यावलोकनेन श्रीहरिभद्रसूरिशिष्या बालचन्द्रकवय इति स्फुटमेव ।

एते कविचूडामणयः कदाऽभूवन्निति विचारे जायमाने एतन्नाटकप्रस्तावना-गतस्य—

" प्रस्तुतवृत्त्या तु समादिष्टोऽस्मि तेनाष्टमीचन्द्रविशाल-
भालेन श्रीमता वस्तुपालेन । "

इत्येतद्वाक्यस्य निर्वर्णनेन मन्त्रिवस्तुपालसाहाय्येन प्राप्तसूरिपदानां चैषां सत्तासमयो विक्रमीयायास्त्रयोदशशताब्द्याः प्रान्तवर्त्त्यैवेत्याविष्करणं न सर्वथाप्य-समीचीनम् ।

एतद्व्यतिरिक्ता एभिरेव कविभिः कृता उपदेशकन्दलीवृत्ति–विवेकमञ्जरीवृत्ति–वसन्तविलासमहाकाव्याद्या ग्रन्था अद्यापि रञ्जयन्ते सुजनजनमनांसि ।

एतत्संशोधनसमये प्रवर्तकश्रीमत्कान्तिविजयपूज्यश्रीमद्हंसविजययोः स-काशादेकैकं पुस्तकं संप्राप्तम् । एतत्पुस्तकद्वितयाधारेण महता प्रयासेन संशोधितेऽ-प्यत्र निबन्धे मतिविभ्रमेणाक्षरयोजकदोषेण वा क्वाप्यशुद्धिर्वाचकानां दृष्टिपथम-वतरेत् तदा संशोध्य वाचनीयं धीधनैरित्याशासे—

प्रवर्त्तकश्रीमत्कान्तिविजयचरणचञ्चरीकः

**चतुरविजयो मुनिः ।**

# पात्राणि ।



| | |
|---|---|
| कलहंसः<br>कलकण्ठः | नृत्यकारौ |
| वज्रायुधः | महाविदेहस्थरत्नसंचयानगरीनृपतिः |
| पुरुषोत्तमः | राज्ञो मन्त्री |
| नारङ्गकः | नृपत्यङ्गरक्षकः |
| विदूषकः | नर्मोक्तिभिर्हास्यकारकः |
| मञ्जीरकः | वेत्रधारी |
| पारापतः<br>श्येनः | पक्षिरूपेण परावर्तितरूपौ देवौ |
| स्थूलपादः | सूदः |
| पुरुषः | राज्ञोऽनुचरः |
| देवी | पट्टराज्ञी लक्ष्मीवतीनाम्नी |
| प्रियंवदा | दासी |
| धारिणी | प्रतिहारी |
| प्रथमदेवः<br>द्वितीयदेवः | ईशानेन्द्रसंसत्सभ्यौ |
| प्रथमवैतालिकः<br>द्वितीयवैतालिकः | मागधौ |



॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिभ्यो नमः ॥

श्रीबालचन्द्रसूरिविरचितं

# करुणावज्रायुधनाटकम् ।

देवः पायादपायात्प्रथमजिनपतिः सर्वगीर्वाणसेव्यः
शैवेयो वः शिवानि प्रथयतु करुणाकन्दलीमूलकन्दः ।
वामेयः किञ्च वामं शमयतु शमितापारसंसारतान्तिः
शान्तिः शान्तिप्रदः स्तात्प्रकटितजगदाभोगरक्षाभियोगः ॥१॥

( नान्द्यन्ते )

**सूत्रधारः**—( सप्रमोदमभितो निरूप्य ) अये ! विभातारम्भ इव विभासते । तथाहि—

परोपकृतिशालिना भुवनमेतदुद्रच्छताऽ—
धुना कमलबन्धुना भगवतापदोषं कृतम् ।
अतो गगनमण्डलाद्व्रजति पात्रमङ्कच्छला—
दुपानहमिवानने दधदपास्तकान्तिः शशी ॥ २ ॥

अपि च—

उदयमयमखण्डश्चण्डभानुस्त्रिलोकी-
नयनतिमिरखेदच्छेदपुण्यादवाप ।
अहह ! विहितचक्रद्वन्द्वविश्लेषपापा-
दिव गलितकरोऽयं मान्द्यमिन्दुः प्रपेदे ॥ ३ ॥

अपि च—

आर्ता इवास्तमयति प्रियवन्मृगाङ्के
स्वं स्वं पिधाय मुखमेकतमःपटेन ।
दिक्कामिनीर्विरुदतीर्बहुभिर्विलापैः
संबोधयन्नयमुदेति करैर्विवस्वान् ॥ ४ ॥

अपि च—

तुलयतितमामर्कस्ताम्रीमयं नवझल्लरी-
मयमपि शशी जीर्यड्ढक्कापुटाकृतिमश्नुते ।
इयमपि मही देहिच्छायामिषाज्जलमानुषै-
रिव कवचिताशेषैः शोषंगतस्य तमोऽम्बुधेः ॥ ५ ॥

( इति परिक्रम्य सविनयमञ्जलिं बद्ध्वा सामाजिकान् प्रति ) भो भोः सभासदः ! श्रूयतामवधानमाधाय मामकीनं वचः । तथा च—

प्राग्वाटान्वयसिन्धुपार्वणविधुः श्रीचण्डकोऽभूत्पुरा
तस्मान्मण्डितभूरभूच्च तनुभूश्चण्डप्रसादाभिधः ।
सोमः किञ्च तदात्मजः समभवद्विश्वप्रियो भावुक—
स्तस्यापि प्रथितः सुतोऽजनि जने नाम्नाश्वराजः कृती ॥ ६ ॥

अपि च—

तत्पुत्रः समभूद्विभूतिवसतिः श्रीमल्लदेवाख्यया
ज्येष्ठः श्रेष्ठगुणैकभूस्तदनुभूः श्रीवस्तुपालोऽभवत् ।
तेजःपाल इति प्रसिद्धमहिमा जज्ञे कनिष्ठोऽनयोः
कल्पानोकहकन्दलप्रतिकृतिर्यस्योपकारी करः ॥ ७ ॥

किञ्च—

शास्त्राम्भोधिमतीवपीवरधिया नावेव यस्तीर्णवान्
मग्नस्तु प्रतिवासरं जितमधौ साधौ तदीये रसे ।
नष्टः पापमलिम्लुचाच्च कुरुते धर्मे गुणारोपणं
तत्कस्यात्र न वस्तुपालसचिवश्चित्रीयते चेतसि ॥ ८ ॥

अपि च—

ऐन्द्रो मण्डप एष चण्डपकुलश्वेतांशुना निर्ममे
येनानल्पगुणापणेन तरणेर्वीहारविष्कम्भकः ।
तत्तत्पूर्वजमूर्तिभिस्तिलकितः शैवेयवामेययो-
श्चैत्यद्वन्द्वमिदं च संचितयशस्संदोहसंदेहकृत् ॥ ९ ॥

अथवा गूर्जरधराधिराजश्रीवीरधवलसचिवावतंसस्याविश्राऽन्त-मेव कनकधाराधोरणीवर्षप्रीणिताशेषवनीपकस्य निजदोर्मण्डलचण्डिम-कुण्डलितवैरिविक्रमस्य निरवद्यधर्माचरणचातुरीविस्तारितकृतयुगाव-तारस्य स्थानस्थाननिष्पाद्यमानसुरसदनशिलासंघातटङ्कणटणत्का-रैरभिचारठकारोच्चारैरिव निर्वासितकलिपिशाचस्य विवेकवाचस्पते-रमुष्य कतिशः सुचरितानि समुद्गीर्यन्ते । प्रस्तुतवृत्त्या तु समादिष्टोऽस्मि तेनाष्टमीचन्द्रविशालभालेन श्रीमता वस्तुपालेन । यदत्र तत्रभगवतः

शत्रुञ्जयशिखरिशिखामणेर्विमलकेवलज्ञानमुकुरसंक्रान्तत्रिभुवनोदरवि-वर्तमानपदार्थसार्थस्य पुरुषोत्तमनाभिसूतेर्देवाधिदेवस्य युगादिव्यवहारवेधसः सेवाहेवाकिदेवासुरविसरशिरोमणिमुकुटविटङ्कशाणानिशातचरणतामरसनखचन्द्रमसो ऽपारसंसारपारावारनिमज्जज्जन्तुसंतानसेतुभूतस्य स्मरविजयकृतः प्रथमतीर्थकृतः सुरसद्मनि जिनमतप्रसिद्धः करुणारसानुविद्धः कोऽपि प्रबन्धस्त्वयाभिनेतव्यः। किञ्च, लोको हि परिचितगुणद्वेषित्वात् नूतननूतनवस्तुनि स्वमनो रमयति। ततो नूतनः कोऽप्यस्ति सुधाकरकरनिकरशुद्धः सुश्लिष्टललितबन्धः प्रबन्धः। येन समलङ्कृतसंसदां सभासदां मनो विनोदयामि। (इति मीलितदृक् चिन्तां नाटयति)।

(प्रविश्य)

**नटः**—(सविस्मयं) मारिष! किमिति चिन्ताचान्तस्वान्त इव विलोक्यसे।

**सूत्रधारः**—(उन्मील्य चक्षुषी सहर्षास्मितम्) भाव! साधु समागतोऽसि। कथय तावत् कमपि जिनमतप्रसिद्धं करुणारसानुविद्धं नूतनप्रबन्धं येनामून् सभासदः प्रसादमासादयामि।

**नटः**—मारिष! श्रीदेवेन्द्रगुरुस्वहस्तस्वपदनिवेशितस्य भुवनभद्रङ्करस्य श्रीभद्रेश्वरसूरिगुरोः पट्टनभस्तलालङ्करणकिरणमालिना प्रतिवादिदितितनयदमनसौरिणा श्रीमदभयदेवसूरिणा निजकरतामरसप्रतिष्ठितानप्रतिमप्रतिभाभरसौरभदुर्भगीकृतत्रिदशसूरीन् श्रीहरिभद्रसूरीनभिजानासि?।

**सूत्रधारः**—(साक्षेपम्)

साहित्याम्बुधिबन्धुरामतितरां षट्तर्कखण्डान्वितां

नानालक्षणदुर्गदुर्गमतमां विद्यामनन्तामपि ।
सच्चक्रेण समाश्रिताः सुकृतिनो ये साधयन्ति स्म ता–
नेकः को मुनिचक्रवर्तिन इह क्षोणितले वेद न ॥ १० ॥

अपरं च—

विलसदमृतद्वेषा येषां वचःप्रचयं पपुः
सपुलकवपुःस्तम्भा जम्भान्तकादिसुराः पुरा ।
तदपलपने ते वर्त्तेरन्नथापरथा कथं
न विधुरधुना तत्पिण्याकः स चेद् भुवने भवेत् ॥ ११ ॥

अपि च—

यत्कीर्त्तिगौर्येण मिथोऽप्यलक्ष्यौ
गौरीगिरीशौ दिवि गौरकान्ती ।
करप्रपञ्चैर्मिलितौ वियोग–
भीत्यार्द्धनारीश्वरतां प्रपन्नौ ॥ १२ ॥

**नटः**—तत्पदपङ्कजमधुव्रतेन कविकर्मकरणनिस्तन्द्रेण श्रीमदाचार्यबालचन्द्रेण विहितः सर्वजनहितः समस्ति त्रिजगतामपि कृतपुण्यसंबन्धः करुणावज्रायुध इति प्रबन्धः ।

**सूत्रधारः**— ( सप्रमोदम् )

क्षोणीभर्तुश्चरितमतुलं तस्य वज्रायुधस्य
श्रीमानस्मिन् वपुरिगणभृद्बालचन्द्रः कवीन्द्रः ।
सान्द्रप्रीतिर्गुणगणवती संसदेषाप्यशेषा
दक्षाः साक्षादपि वयमिमे स्पष्टनाट्यक्रियासु ॥ १३ ॥

अपि च—

बुध्नादेवायमह्नाय तस्मादस्माकमुच्चकैः ।
प्राचीनः पुण्यकल्पद्रुः फलेग्रहिरजायत ॥ १४ ॥

**नटः**—मारिष ! अतीतक्षितिपतिचरितप्रबन्धकरणकष्टकवलिताशयानां कवीनां कथय का नाम स्वार्थसंपत्तिः । स्वार्थभ्रंशो हि पुंसां परमपाण्डित्यम् ।

**सूत्रधारः**—भाव! नैतदुच्यते । यतः—

सर्वः परार्थमारम्भः संरम्भः शुभकर्मणाम् ।
उदेति प्रत्यहं पश्य स्वकार्याय किमर्यमा ॥ १५ ॥

अपि च—

परोपकारकरणात्पुण्यमुज्जृम्भते सताम् ।
पुण्यं हि सर्वसंपत्तिवशीकरणकार्मणम् ॥ १६ ॥

( नेपथ्ये )

साधु साधु हृदयङ्गममभिहितवानसि । यतः—

का कामधेनुरिह कश्चिन्तामणिरपि च कल्पशाखी कः।
सर्वाण्यमूनि भुवने पर्यायवचांसि पुण्यस्य ॥ १७ ॥

**सूत्रधारः**—( श्रुतिमभिधा [नी] य ) अये ! प्रारब्धमेव नर्तकैः । तदेहि भाव ! आवामपि अनन्तरकरणाय सज्जीभवावः ।

( इति निष्क्रान्तौ )

॥ प्रस्तावना ॥

( ततः प्रविशति "का कामधेनुः" (१७) इति पठन्कलहंसः कलकण्ठश्च )

**कलकण्ठः**—सखे कलहंस ! एवमेवैतत् । तथाहि—

कल्प्यते किमिति कार्मणचिन्ता–
खेदमेदुरमिदं निजचेतः ।
वश्यतां नयति पूर्वभवात्तं
पुण्यमेव भुवनानि किमन्यत् ॥ १८ ॥

**कलहंसः**—सखे कलकण्ठ ! विश्वस्यापि हृदयसंवादि तावकं वचः । स एष प्राचीनपुण्यस्यैव परिपाकप्रकर्षः, यदयं मङ्गलावती-विजयवसुमतीयुवतीवदनातिलकायमानरत्नसञ्चयापुरीपरमेश्वरक्षेमङ्कर-क्षितिपालकुलकमलदिनेश्वरश्चतुरशीतिलक्षप्रमितकरितुरगरथवरूथिनी-भिराक्रान्तदिक्चक्रः स्वामी श्रीवज्रायुधनामा महीशक्रः,

विजित्य जगतीमेतां द्विस्त्रिखण्डमयीमपि ।
अखण्डितभुजावीर्यः स्वपुर्यां पुनराययौ ॥ १९ ॥

यतः—

विना तेजोऽन्तरं चक्षुर्निर्णयोऽपि हि निर्नयः ।
यथा तथा विना पुण्यं विक्रमोऽपि हि विक्रमः ॥ २० ॥

**कलकण्ठः**—इदमित्थमेव । अपरं च सखे कलहंस ! स क्षेम-ङ्कराक्षितिपतिरमुष्य नृपतेः पिता यः किल सकलभुवनभास्कर-तीर्थकरः । संप्रति समस्तसुरपतिनिकुरम्बपरिचर्यमाणः समस्ति विहरमाणः ।

**कलहंसः**—अथ किं ? ।

**कलकण्ठः**—( सोल्लासम् ) तर्हि,

जगत्पिता यस्य पिता जिनाधिपः

स्वयं तु वास्तोष्पतितुल्यवैभवः ।
अगोचराणामपि पुण्यसंपदा-
मसौ न पात्रं कथमुर्वरावरः ॥ २१ ॥

अपि च—

शेषदण्डजुषः क्षोणीछत्रस्य कलशायते ।
अयं वलयिताम्भोधिदुकूलस्योपरि स्थितः ॥ २२ ॥

**कलहंसः**—सखे ! किमेकमुच्यते ?

उत्कृष्टभूपगणनासु विधाय रेखा-
मस्यादितः सुरसरिन्मिषतो विरञ्चिः ।
तत्तुल्यमन्यमवनावनवेक्ष्य पाणे-
श्चन्द्रं खटीमिव मुमोच नभःकटत्रे ॥ २३ ॥

अपि च—

प्रतिच्छन्दः कुन्दस्तुहिनरुचिरुच्चैरुपकथा
समस्यावश्यायः स्फटिकशिखरी च प्रतिकृतिः ।
अखण्डं पाखण्डं कुमुदवनखण्डं सुरसरि-
त्पयः पौनःपुन्यं विशदमहसामस्य यशसाम् ॥ २४

**कलकण्ठः**—सखे ! साधूदितं भवता ।

क्षितीशा बहवोऽभूवन् भविष्यन्ति च सन्ति च ।
परम्परोपकारित्वस्याद्वैतमिह वर्त्तते ॥ २५ ॥

**कलहंसः**—( सशिरःकम्पम् )

निष्कारणोपकर्तॄणामयं सीमा महीपतिः ।
किमन्यदर्थितः प्राणानपि दत्ते यदर्थिनाम् ॥ २६

( क्षणमिव स्थित्वा साकूतम् ) सखे कलकण्ठ ! तदद्य परोपकारव्यसनिनोऽमुष्य स्वामिनोऽशुभारम्भं शुभावसानं कमपि व्यवसायमहं वितर्कयामि यदिदानीं वामेन दक्षिणेन च चक्षुषा परिस्फुरितम् । तदधुनावामपि तस्य चतुर्दशीनिशागृहीतपारितदुरितौषधपौषधव्रतस्य पौषधशालाप्राङ्गणे सिंहासनमलङ्कृत्य पुरुषोत्तमेन सह मन्त्रिणा धर्मगोष्ठीपरायणस्य प्रत्यक्षधर्ममूर्तेर्नाथस्य सविधीभवावः ।

( इति त्वरिततरं निष्क्रान्तावुभौ )

( विष्कम्भकः )

( ततः प्रविशति सुरगिरिशिखरस्थ इव दिवस्पतिः काञ्चनसिंहासनाधिगतमूर्त्तिश्चक्री वज्रायुधः अमात्यपुरुषोत्तमश्च कलहंसः कलकण्ठश्च )

**राजा**—

भजत भजत धर्म्यं कर्म दुष्कर्मघर्म-
क्षपणनिपुणलीलावारिसब्रह्मचारि ।
कुगतियुवतिलास्यस्थानमालस्यमस्मि-
न्नवगणयत लोकाः ! सर्वशोकाधिकारि ॥ २७ ॥

**मन्त्री**—देव ! धर्मस्य किं विस्फूर्जितम् ? ।

**राजा**—अमात्य !

यद्द्वारे हृदयं हृदा ननु सदा निर्दल्यते सेवकै-
रुद्वल्गन्ति हया यदङ्गणभुवि क्रीडन्ति यद्दन्तिनः ।
प्रातर्बन्दिगिरा सुधारसकिरा गीतेन यन्मुच्यते
निद्रा सान्द्रमतन्द्रमेव तदिदं धर्मस्य विस्फुर्जितम् ॥ २८ ॥

( नेपथ्ये )

**वैतालिकः**—जय जय नयननलिनविकासनैकमार्त्तण्ड ! चण्ड-

प्रतापसंपद्विशोषिताशेषरिपुनृपतियशःप्रसरकासार ! सारसर्वस्वपराजिताहितराज ! राजन् ! विभातेयं विभावरी । तथाहि—

अयमुदयति मिथ्यातत्त्ववद् ध्वान्तजातं
विपुलमपि विलुम्पन् विष्टपस्यापि गोभिः ।
भविकजनमिवोच्चैर्बोधयन् पद्मखण्डं
जिनपतिरिव देवः पद्मिनीप्राणनाथः ॥ २९ ॥

इतश्च—

संवर्मिता दधुरिमास्तव दन्तिदन्त—
पर्यङ्किका नवविकर्त्तनभाभिराभिः ।
लीलाब्जकूर्परशयालुजयश्रियोऽङ्ग—
रागैकसङ्गमवशादिव शोणिमानम् ॥ ३० ॥

इह हि—

रिपुक्षितिपभूधरप्रकरवज्र ! वज्रायुध !
क्षितीश्वरशिरोमणे ! प्रणयिचक्रचिन्तामणे ! ।
जिनाधिपचतुष्टयी दिशतु शाश्वती शाश्वती-
मियं तव सुखश्रियं सुकृतचिह्नमह्नो मुखे ॥ ३१ ॥

**राजा**—( समाकर्ण्य सप्रसादम् ) कोऽत्र भोः ! ।

( प्रविश्य )

**पुरुषः**—( योजितपाणिः ) आदिशतु देवः ।

**राजा**—अरे नारङ्क ! अस्मदाज्ञया ब्रूहि भाण्डागारिणं जिनदासं यत्त्वयामुष्मै वैतालिकाय सुवर्णकोटिदशकं देयमिति ।

**पुरुषः**—यदादिशति देवः ( इत्यभिधाय निष्कान्तः )

( पुनर्नेपथ्ये )

(क) एसऽक्को गयणंगणिक्कनलिनीपत्तंमि जुण्हादहि-
प्पिट्ठं तारगसालिकूरनिअरं भुंजेइ सग्गट्ठिओ ।
चन्दो वायसपिंडगु व्व पुरदो दीसेइ अत्थंतओ
जस्सिं वायसवाहणि व्व चलिआ धंतावली सोहए ॥ ३२ ॥

( सर्वे समाकर्ण्य स्मयन्ते )

राजा—नियतमेताभिर्वचनरचनाभिः क्रमेलकमुखेन भाव्यम् ।

( ततः प्रविशति विदूषकः )

कलकण्ठः—( विदूषकमालोक्य सोपहासं कलहंसं प्रति जनान्तिकम् ) वयस्य !

पादौ वक्रौ धनुरिव कटी वज्रमध्यानुकारा
निन्द्याकारा जठरपीठरी मुष्टिमेयं च वक्षः ।
बाहू स्कन्धोपचयरहितावास्यमुष्ट्रास्यबन्धु
ग्रीवा नीचा लघुरवयवः कोऽपि नास्य प्रशस्यः ॥ ३३ ॥

कलहंसः—( स्मितं नाटयति )।

विदूषकः—( दक्षिणकरमुदस्य ) (ख) भो ! एयं सत्थि भोदु भवदे।

राजा—( विहस्य ) स्वागतं वयस्याय ।

---

(क) एषोऽर्को गगनाङ्गणैकनलिनीपत्रे ज्योत्स्नादधि-
पृष्ठं तारकशालिकूरनिकरं भुङ्क्ते स्वर्गस्थितः ।
चन्द्रो वायसपिण्डक इव पुरतो दृश्यतेऽस्तयन्
यस्मिन् वायसवाहिनीव चलिता ध्वान्तावली शोभते ॥

(ख) भो एतत्स्वस्ति भवतु भवते ।

**विदूषकः**—( प्रहस्य ) (क) अणवरयमेव सुरयचउराए निअयबंभणीए समं विसयसुहमणुहवंतस्स एदस्सिं मे रम्मे मणुअजम्मे सागदमेव। पुणो धम्ममहाभूअच्छलिअस्स पव्वरयणीसु बंभचेरकलिअस्स गुत्तिहरे विव पोसहहरे लुलियस्स ( इत्यर्धोक्ते )

**राजा**—( विहस्य ) वयस्य! संकील्य निजपुराणपुस्तकं वाचंयमो भव।

**विदूषकः**—(ख) एवं भोदु। ( इत्यभिधाय विनयादिव नम्रीभूय पुरस्तादुपविशति। सर्वे पटान्तेन मुखं पिधाय प्रहसन्ति। )

**मन्त्री**—( राजानं प्रति ) इदमादिशन्ति स्म देवपादाः। "भजत भजत धर्म्यं" ( २७ ) इति। तदिह निजमनसि सर्वे एव धर्मकर्मठः, न कश्चित्पापकापालिकमठः। तथाहि—

एकतो वेदविदुरः सौनिकः पुनरन्यतः।
पापीति व्याहृतः कोपाज्जायते लोहितेक्षणः॥ ३४ ॥

**राजा**—मन्त्रिन्! गड्डरिकाप्रवाहोऽयम्। धर्मकर्मसु लोकस्य न काचित्तत्त्वविचारणा। यतः—

अज्ञाः केचिद्विदधति मुधा धर्मदम्भादधर्मं
कोऽयं धर्मः स्वहृदि नयने मीलयित्वा मृशन्तु।
दीयन्ते यद्वनभुवि दवाः प्राणिनस्त्राणहीना
हन्यन्ते यत्पिशितवलये देवतानां पुरस्तात्॥ ३५ ॥

---

(क) अनवरतमेव सुरतचतुरया निजकब्राह्मण्या समं विषयसुखमनुभवत एतस्मिन् मे रम्ये मनुजजन्मनि स्वागतमेव। पुनर्धर्ममहाभूतच्छलितस्य पर्वरजनीषु ब्रह्मचर्यकलितस्य गुप्तिगृहे इव पौषधगृहे लुलितस्य।

(ख) एवं भवतु।

अपि च किंबहुना भाषितेन—

यो जन्तुहिंसार्जितधर्मकर्मणा
गन्तुं दिवस्तुङ्गपदं समीहते ।
स भस्मसोपानपथेन निश्चितं
समुच्चमारोढुमगेन्द्रमिच्छति ॥ ३६ ॥

अपि च—

हिंसामयः शिशुक्रीडाधूलीदेवकुलोपमः ।
स किं धर्मोऽपि धर्मान्तर्बालिशेनापि पठ्यते ॥ ३७ ॥

किञ्च—

अभेद्यो वादिभिर्जैनः कुञ्जरैरिव मन्दरः ।
जीवरक्षामयः साक्षादेष धर्मः सनातनः ॥ ३८ ॥

अपि च—

स्वर्गापवर्गसंपत्तिकारणं करुणामयः ।
जैन एव सतां धर्मः कर्मधर्मधनाधनः ॥ ३९ ॥

अन्यच्च—

एनं जैनं विना धर्ममन्ये धर्माः कुधीमताम् ।
संवृता एव शोभन्ते पटच्चरपटा इव ॥ ४० ॥

**कलकण्ठः**—( अपवार्य ) वयस्य कलहंस ! पश्य पश्य ।

आकर्णयन्नुभाकर्णिसकर्णः सचिवोत्तमः ।
रोमाञ्चितवपुर्यष्टिरेष माषफलीयति ॥ ४१ ॥

**कलहंसः**—( मन्त्रिणमालोक्य शिरो धुनीते )

**मन्त्री**—देव ! खल्वक्त्वाऽन्यधर्मसंकथाम्,

दयैव सर्वभूतेषु यदि धर्मस्तदा सदा ।
किमीडयः पीडयते स्वात्मा राजन्ननशनादिभिः ॥ ४२ ॥

**राजा**—मन्त्रिन् ! नैतदुच्यते । यतः—

रसकर्मज्वरौ दत्तदरौ हन्त ! सहोदरौ ।
देहाद्देहवतां नेह नश्यतोऽनशनं विना ॥ ४३ ॥

अन्यच्च—

प्रलीयन्ते न कर्माणि तपःकर्म विना ननु ।
सकर्मा शिवशर्माणि शाश्वतानि लभेत न ॥ ४४ ॥

**विदूषकः**—( सहासं विनिश्चित्य ) (क) भो रायं ! धम्ममहाभूअगहिअस्स एदं दे पलविदं अम्ह सिरोवेयणमुप्पाडेइ । जओ—

(ख) खंता पिअंता इह जे मरंति पुणोऽवि ते खंति पिअंति रायं ! ।
खुहाइ तत्ता पुण जे मरंति पुणोऽवि तप्पंति खुहाइ ते उ ॥४५॥

**राजा**—( विहस्य ) वयस्य !

अपालयित्वा सहकारपादपं
फलर्द्धिमुद्यानपतिर्लभेत न ।
काले यथा चारुतपस्तथा जनो
ऽप्यपालयित्वा लभते न तत्फलम् ॥ ४६ ॥

---

**(क)** भो राजन् ! धर्ममहाभूतगृहीतस्य एतत्ते प्रलपितं अस्माकं शिरोवेदनामुत्पादयति ।

**(ख)** खादन्तः पिबन्तः इह ये म्रियन्ते पुनरपि ते खादन्ति पिबन्ति राजन् ! ।
क्षुधा तप्ता पुनर्ये म्रियन्ते पुनरपि तप्यन्ते क्षुधा ते तु ॥

**विदूषकः**—(क) भो रायं ! सव्वजणहिअं तए अभिहिअं । पुणो जणच्छायापयाणविंझस्स तवसाहिणो काउ फलसंपयाओ ।

**राजा**—निरर्गला एव स्वर्गापवर्गसुखसंपत्तयः तपःकल्पशाखिनः फलसंपदः ।

**विदूषकः**—( सहासं संस्कृतमाश्रित्य ) हंहो राजन् ! मुर्खशिखामणिरसि । यतः—

पूर्वाभ्यासवशाद्वशीकृतरिपुक्ष्माकान्त ! सान्तःपुरं
राज्यं प्राज्यविभूतिसंभृतमदः प्राप्यापि संतप्यसे ।
यन्नूनं ननु धर्मकर्मभिरिति स्वर्गापवर्गाय य-
त्कर्कन्धूः फलितास्ति तत्र किमिति क्ष्मापाल ! किञ्चाम्लिका ॥४७॥

( सर्वे हास्यं नाटयन्ति )

**राजा**—( विहस्य ) वयस्य ! क्रमेलकमुख इति नामसदृशी ते भणितिसरसी । अयोग्योऽसि धर्मरहस्यस्य । परं वयस्य इति लेशोद्देशेन किञ्चिदुपादिश्यते । आस्तां तावदवाङ्मनसगोचरापवर्गसुखवर्गवरूथिनी ।

यथा प्रातः कश्चित्कुशतृणमुखस्थेन कुमति-
स्तुषारस्यावश्यं तुलयति तुषारेण जलधिम् ।
तथा स्वर्गोदग्रप्रचुरसुखसंदोहममुना
भुवः सौराज्येन त्वमपि गतबुद्धे ! तुलयसि ॥ ४८ ॥

---

(क) भो राजन् ! सर्वजनहितं त्वयाभिहितं, पुनर्जनच्छायाप्रदानवन्ध्यस्य तपःशाखिनः काः फलसंपदः ? ।

**विदूषकः**—(क) ही ही रायं !

(ख) हत्थागया इमे कामा कालिआ जे अणागया ।

केणं दिट्ठे परे लोए अत्थि वा नत्थि वा पुणो ॥४९॥

**राजा**—( विहस्य )

करस्थमप्येवममी कृषीवलाः
क्षिपन्ति बीजं पृथुपङ्कसङ्कटे ।
वयस्य ! केनापि कथं विलोकितः
समस्ति नास्तीत्यथवा फलोदयः ॥ ५० ॥

**विदूषकः**—( निरुत्तरीभूय )(ग) भो रायं ! निअमंतिणा समं चेव धम्मविआरं करेह । अम्हे उण निअबंभणीए मुहकमलझाणं कारिस्सामो ।

( इति मीलितदृक्कः कृतपर्यङ्कासनबन्धविधिर्ध्यानं नाटयति । सर्वे हसन्ति )

( नेपथ्ये )

एते बन्धुरगन्धसिन्धुरघटादानोर्मिभिः पङ्किले
सिंहद्वारि निषेदुषः सरभसं सेवार्थिनः पार्थिवान् ।
निध्यायन्ति सहासमाकृतिकृतः पौरा गरीयःपरा-
भूतिम्लानमुखत्विषः परिलसल्लज्जानमत्कन्धरान् ॥ ५१ ॥

(क) हीही राजन् ( हीही निपातो विदूषकाणां हर्षे )

(ख) हस्तागता ( स्वाधीना वर्तन्ते ) इमे कामाः कालिकाः ( अनिश्चिताः ) येऽनागताः । केन दृष्टः परो लोकः अस्ति वा नास्ति वा पुनः ॥

( ग ) भो राजन् ! निजमन्त्रिणा समं चैव धर्मविचारं कुरु । वयं पुनर्निजब्राह्मण्या मुखकमलध्यानं करिष्यामः ॥

१ ' को जाणई परे लोए ' इति पाठानुसारेण तु ' को जानाति परो लोकः ' ।

**विदूषकः**—( समाकर्ण्य सकौतुकम् ) (क) भो रायं ! रायसमूहं सीहदुवारे पउरेहिं उवहसिज्जंतं गदुय जोएमि ।

**राजा**—वयस्य ! एवं कुरु ।

**विदूषकः**—( ससंभ्रममुत्थाय निष्क्रान्तः )

**मन्त्री**—( स्वगतम् ) अहो ! क्षेमेण प्रदीपनमुपशान्तम् ।

( नेपथ्ये उच्चैःस्वरम् )

(ख) परित्तायध परित्तायध ।

**राजा**—( सविस्मयम् ) किमयं वराकः क्रमेलकमुखः प्रलपति ।

( प्रविश्य संभ्रान्तः )

**क्रमेलकमुखः**—(ग) महाराय ! परित्ताहि परित्ताहि मं ।

**राजा**—वयस्य ! मा भैषीः । किमिदम् ।

**विदूषकः**—(घ) जाव अहं तुरिअतुरिअं वच्चामि ताव करकलिअदत्तदंडो कोऽवि जमपयंडो सिंहदाराउ सम्मुहं जेव वलिअ मह मारणत्थमेव मणुपयमागच्छइ । ( सर्वे नेपथ्यावलोकनेन संभ्रमं नाटयन्ति )

( ततः प्रविशति वामप्रकोष्ठार्पितकनकदण्डो दण्डी )

**राजा**—( सहासम् ) वयस्य ! अयं ते यमः ।

**विदूषकः**—( विलोक्य भीत इव पृथ्वीपतेः पादयोर्निलीयते )

**राजा**—( विहस्य ) वयस्य ! नायं यमः प्रतिहारोऽयम् ।

---

(क) भो राजन् ! राजसमूहं सिंहद्वारे पौरैरुपहस्यमानं गत्वा पश्यामि ।

(ख) परित्रायध्वं परित्रायध्वम् ।

(ग) महाराज ! परित्रायस्व परित्रायस्व माम् ।

(घ) यावदहं त्वरितत्वरितं व्रजामि तावत्करकलिकादत्तदण्डः कोऽपि यमप्रचण्डः सिंहद्वारात्सम्मुखं एव वलित्वा मम मारणार्थमेवानुपदमागच्छति ।

**विदूषकः**—( विलोक्य सवैलक्ष्यस्मितमिव ) (क) हुं, उवलक्खिदो एस पडिहारो न जमो। ( सर्वे हसन्ति )

**प्रतीहारः**—( प्रणम्य ) देव ! सुबाहुयुगबाहुप्रभृतयः सेवाहेवाकिनः पार्थिवा द्वारि वर्त्तन्ते। कः आदेशः ?।

**राजा**—अरे मञ्जीरक ! तिष्ठन्तु द्वार एव तावद् यावद्वयं सभामलंकुर्मः।

**प्रतीहारः**—आदेशः प्रमाणम्। ( इत्यभिधाय निष्क्रान्तः )

( पुनर्नेपथ्ये )

असमय इति बुद्ध्वा द्वारपालैर्निषिद्धाः
प्रतिफलनमिषेण स्फाटिकप्राङ्गणेषु।
ददृशुररिनरेन्द्राः खं निषण्णा रसान्त-
र्गतमतनुह्रियेवाऽन्योन्यमानम्रवक्त्राः ॥ ५२ ॥

**राजा**—( अनाकर्णितेन ) मन्त्रिन् ! पुनर्विज्ञपयसि किञ्चित् ?।

**मन्त्री**—यदादिशन्ति देवपादास्तत्तथैव नान्यथा। परं देव ! नीतिराह। यत्—

चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ५३ ॥

इतिन्यायात्।

प्रत्यक्षमनवेक्ष्यापि किञ्चित्तत्फलमुज्ज्वलम्।
हित्वा विषयजं शर्म तपः कर्म करोति कः ॥ ५४ ॥

(क) हुं ( स्वीकारे ) उपलक्षितः एष प्रतिहारो न यमः।

अपि च—

दर्श्यतां देव ! तत्किञ्चित्प्रत्यक्षं तपसः फलम् ।

**राजा—**

प्रत्यक्षमपि हे दक्ष ! श्रूयतां यदि संशयः ॥ ५५ ॥

तथाहि—

मृगाक्षीणां नामाप्यसहत न यः सोऽपि तपसा
वशीभूतः शश्वद्विमलयति दासेरक इव ।
नमन्नीशः क्षोणीधरदुहितुरंह्रिद्वयमहो !
जटाजूटच्युत्यत्रिदशतटिनीतोयततिभिः ॥ ५६ ॥

अपि च, मन्त्रिन् ! आस्तां तावज्जीवस्याजीवस्यापि ।

कष्टकारस्करः स्पष्टमिहैव फलदायकः ।
स्त्रैणपाणिग्रहं हेम विधत्ते साधितानलम् ॥ ५७ ॥

अतो मन्त्रिन् !—

असारस्य शरीरस्य सारमेतद्गुणद्वयम् ।
तपः प्राणैरपि प्रीतिविधानमपरे जने ॥ ५८ ॥

( नेपथ्ये )

अन्योन्यसंवलितपलाशपलाशवननिकुञ्जान्तरप्रसरत्प्रावृषेण्यपुण्यजलधरासारताररवगर्वसर्वस्वसर्वंकषः पुरा गोत्रभिन्निर्मुक्तदम्भोलिदण्डवित्रस्तमैनाकपक्षविक्षेपघोरनिर्घोषसख उत्पादितसकलजनकर्णजाड्यजनिः कोऽप्यमूर्तो ध्वनिः समजनि । (सर्वे समाकर्ण्य संभ्रमं नाटयन्ति)

( पुनर्नेपथ्ये महान् हाहाकारः )

**राजा—**( सवितर्कम् )

पुरेऽस्मिन्नावासान् दहति दहनः केलिगहनः
करी वा प्रासादान् दलयति मदान्धः किमु किमु ।
हहाहाहाकारः किशलयति चित्ते भ्रममसा-
वकस्मादस्माकं प्रमदरहितः पौरविहितः ॥ ५९ ॥

( पुनर्नेपथ्ये )

गृह्णीत भोः ! गृह्णीत भोः ! एनमसमञ्जसकारिणं पृष्ठचारिणम् । अयं गृहीत इव गृहीत इव । अमुना मारित इव मारित इव वराकः पुरश्चारी ।

**राजा**—( समाकर्ण्य कोपाटोपादाविर्भूतभ्रूकुटिभङ्गतरङ्गितललाटतटः )

उदधिकूलदुकूलवतीमिमां
वसुमतीयुवतीं मयि शासति ।
पुरि क एष करोत्यसमञ्जसं
क इह भोः ! करवालमुपानय ॥ ६० ॥

**मन्त्री**—( स्वगतम् )

शमोपष्टम्भितः पौरतुमुलच्छलवात्यया ।
शौर्यवायुसखः साक्षादुत्तस्थौ स्वामिनः किमु ॥ ६१ ॥

( प्रविश्य )

**पुरुषः**—( पृथ्वीपतेः करवालं समर्पयति । )

**राजा**—( कल्पान्तकालानलज्वालासहचरमिव कोशान्मण्डलाग्रमाकृष्य करे करोति )

**विदूषकः**—( सभयमिव वेपमानवपुः ) (क) बीहेमि बीहेमि । ( इति ब्रुवन् सत्वरमुत्थाय सिंहासनाधः प्रविशति । सर्वे हसन्ति )

---

( क ) बिभेमि बिभेमि ।

**कलहंसः**—( अपवार्य ) वयस्य कलकण्ठ ! पश्य पश्य,

शत्रूणां कालरात्रिर्मृगमदतिलकः प्राज्यसाम्राज्यलक्ष्म्याः
शाखा रोषद्रुमस्य प्रबलतरमहःखङ्गिनः शृङ्गयष्टिः ।
स्फूर्जच्छौर्यप्रदीपाञ्जनमणुयशःपुण्डरीकस्य नालं
पाथोधिः पुष्कराणामसिरसितरुचिर्भाति देवस्य हस्ते ॥६२॥

**कलकण्ठः**—वयस्य कलहंस !,

वैकुण्ठनाकाध्वनि पश्य भान्ति
कृपाणपट्टे पृथुपुष्कराणि ।
हताहितक्षोणिभृतां प्रयाता–
मस्मिन् पदानीव करम्बितानि ॥ ६३ ॥

**कलहंसः**—साधु साधु वयस्य कलकण्ठ ! साधु गदितवान् भवान् ।

**राजा**—( कान्तिकलापकरालं करवालं विधूनयति )

**मन्त्री**—( स्वगतम् )

सीमालक्षितिपालकालभुजगः संग्रामसीमाश्रमः
श्रीसीमन्तपथः प्रतापहुतभुग् धूमः क्रुधां कन्दलः ।
कुल्या कीर्त्तिलतावनस्य कबरी निस्सीमराज्यश्रियः
शौर्यश्रीकरिणीकरः करतले देवस्य वल्गत्यसिः ॥ ६४ ॥

( पुनर्नेपथ्ये )

वज्रायुधो मे शरणं शरण्य
इत्युच्चकैर्दीनगिरा लपन्तम् ।
धावन्तु धावन्तु वराकमेनं
रक्षन्तु रक्षन्तु जगन्त्यमुष्मात् ॥ ६५ ॥

**राजा**—( समाकर्ण्य ससंभ्रमं करवालकरालपाणिः सिंहासनाद्यावदुत्थानं नाटयति तावद्वेगविजितधनुर्मुक्तबाणः पक्षसूत्कारध्वनिभिर्वाचालं दिक्चक्रवालं कुर्वाणः 'शरण्यचूडामणे राजन् ! रक्ष रक्ष मां' इति ब्रुवाणः प्रतिपक्षपृष्ठपात-भयसंकोचितनिजप्राणः कम्पमानवपुः तरलनयनयुगलः प्रसरदमन्दश्वासनिःश्वासवातोच्चावचीभवद्गलः दीनः परित्राणहीनः संलीनश्चरणमूलमेकः पारापतः पतङ्गः । ततश्च चमरेन्द्रानुधावितदम्भोलिदण्डमनुहरन् अलमलमासिदण्डाडम्बरेण । 'राजन् ! मम भक्ष्यं मुञ्च मुञ्च' इति व्याहरन् जातप्रलयपवनवेगसङ्गमः कृतान्त इव जङ्गमः कृततन्मार्गानुगमः प्रविशति श्येनविहङ्गमः । )

**पारापतः**—( सदैन्यं राजानं प्रति ) अनयदहननीर ! नयाम्र-वनकीर ! गुणसहस्रकिर्मीर ! गम्भीर ! परोपकारशरीर ! धीर ! प्राप्तप्रतिज्ञार्णवतीर ! वीर ! रक्ष रक्ष मामस्मुष्माद्विहङ्गमाधमात् शरणागतोऽस्मि तव ।

**राजा**—( असिं कलहंसायोपनीय पारापतं प्रति सप्रतिज्ञम् ) अरे कान्दिशीक ! भव निर्भीकः । ननु समस्तजन्तुयातनाऽश्रान्तकृतान्त-वदनविवरादपि त्वां कर्षामि ।

**पारापतः**—महाप्रसादः । ( इति वदन् इलातलमिलन्मौलिः प्रणमति )

**श्येनः**—( साक्षेपं राजानं प्रति ) राजन् ! ममैनमुपनय भक्ष्य-पक्षिणं येन बुभुक्षाक्षामनिःस्थामतनोरात्मनस्तृप्तिमादधामि ।

**राजा**—( सनिश्चयम् ) अयि श्येनपक्षिन् !,

तवार्पयिष्ये नहि भक्ष्यपक्षिणं
क्षणं निमील्येक्षणमन्तरा मृश ।
किं क्षत्रियाणां कुलधर्म एष य-
स्त्यर्प्यते जीवितमङ्कमागतम् ॥ ६६ ॥

यदुक्तम्—

लोभाद् द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम् ।
ब्रह्महत्याफलं तस्य पापमाहुर्मनीषिणः ॥ ६७ ॥

श्येनः—राजन्!,

मार्गणान् सफलीकृत्य कामं विसृजतः सतः ।
शात्रवाणीव पापानि धर्मिणस्तव बिभ्यति ॥ ६८ ॥

राजा—श्येनपक्षिन् ! श्रुतीनां बहिष्पथीना ते मतिः । यतः—

चतुःसागरपर्यन्तां यो दद्यात्पृथिवीमिमाम् ।
एकश्च जीवितं दद्यात्तयोरभयदोऽधिकः ॥ ६९ ॥

अपिच—

हुतमिष्टं च तप्तं च तीर्थसेवाफलं श्रुतम् ।
सर्वाण्यभयदानस्य कलां नार्हन्ति षोडशीम् ॥ ७० ॥

किञ्च—

उत्खन्यमाने तव पुच्छपिच्छेऽ-
प्याविर्भवत्येव यथा व्यथान्तः ।
तथा व्यथाऽस्यापि भवेदवश्यं
भीतिश्च मृत्योः प्रियजीवितस्य ॥ ७१ ॥

तद्भोः ! बुध्यस्व बुध्यस्व विमुञ्चेमं दुराग्रहपरिग्रहम् । यतः—

अपि कण्ठगतैः प्राणैरकृत्यं न विधीयते ।
भविष्यतेऽत्र कृत्वा किमकृत्यमजरामरैः ॥ ७२ ॥

श्येनः—महाराज ! सर्वमिदमनुभवसिद्धमविरुद्धं भवता हितं दोषरहितं महापुरुषविहितमभिहितम् । परमवनिवधूहार ! यः पर-

प्राणापहारः स्वप्राणसाधारोऽस्माकं स कुलाचारः। तदिदं ममाकृत्यं कृत्यमेव। यतः—

स्वीयः स्वीयः कुलाचारः कृत्यमाहुर्मनीषिणः।
अकृत्यं च विदुस्तत्त्ववेदिनस्तद्विपर्ययः॥ ७३॥

**राजा**—(सहासम्) कुलाचार इति न परित्यजसि कुलक्रमागतमपि दुःखदौर्गत्यदारिद्र्यादि किं न परित्यजसि!।

**श्येनः**—(सव्यथम्) राजन्! सांप्रतमनुभवविरुद्धमिवाभिदधासि। यतः—

धर्माधर्मविमर्शनमिह सुस्थितसुखितचेतसामेव।
धर्मप्रियोऽपि कुरुते क्षुत्क्षामः किन्तु नाकृत्यम्?॥७४॥

तदिदानीं पर्याप्तं धर्मविवेकेन, समर्पयैनं भक्ष्यपक्षिणम्। बाधते मां बुभुक्षाराक्षसी (इति ब्रुवाणः किञ्चिदग्रतः परिक्रामति)।

**पारापतः**—(सभयं राज्ञः सिंहासनाधः प्रविशति)

**विदूषकः**—(मार्जारस्वरेण भापयति)

**पारापतः**—केयमुत्पातपरम्परा मम (इति वदन् कम्पमानः समुड्डीय राज्ञः सिंहासनोपरि भवति)

**राजा**—(सोपहासम्) वयस्य वीरावतंस! मैनं भापय तपस्विनम्। (सर्वेऽपि हसन्ति)

**पारापतः**—(श्येनमभिवीक्ष्य भयवेपमानवपुः पृथ्वीपतेः पटान्तरे प्रविश्यात्मानं गोपयति)

**राजा**—(पारापतं स्वपाकरूपमिव वक्षसा समादाय कीरपुच्छमिव पुच्छगुच्छं परामृशन्)

मा भैषीर्वत्स ! मा भैषीः सांप्रतं भव निर्भयः ।
आक्रामति न शक्रोऽपि विक्रमी त्वामिह स्थितम् ॥ ७५ ॥

**श्येनः**—( सेर्ष्यम् )
किमयं सोदरस्तेऽहं सापत्नेयः कथं नृप ! ।
यदेनं त्रायसे मां तु म्रियमाणमुपेक्षसे ॥ ७६ ॥

( पुनः सोपशमम् )
पातः ! पासि यथा पतत्रिणममुं निष्कारणं त्वं तथा
मृत्योर्मामपि पाहि नाहितकृतः कस्यापि सन्तो यतः ।
मद्भीतेः शरणं भवन्तमगमत्पारापतोऽयं हहा !
क्षुत्क्षामः कमहं तु हन्त ! शरणं यामि त्वदन्यं वद ॥७७॥

**राजा**—( सकरुणम् ) कस्कोऽत्र भोः ! सूपकारेषु ।

( प्रविश्य )

**स्थूलपादः**—( योजितपाणिः ) आदिशन्तु देवाः ।

**राजा**—( स्थूलपादस्य कर्णे एवमेव )

**स्थूलपादः**—आदेशः प्रमाणं ( इत्यभिधाय निष्क्रान्तः )

**श्येनः**—( सहासेर्ष्यम् )
एकः क्ष्मापोपेक्ष्यतेऽपेक्ष्यतेऽन्यः
कोऽयं धर्मस्तावकीनो नवीनः ।

( पुनः सवैलक्ष्यम् )
एते गच्छन्त्युत्सुका मामका हा !
प्राणास्त्राणापायमासाद्य सद्यः ॥ ७८ ॥

( इतिब्रुवाणश्चक्रभ्रमिं नाटयित्वा मूर्च्छति )

**राजा**—( सरभसं सकरुणमुत्थाय ) जलं भोः ! जलम् ।

( प्रविश्य )

पुरुषः—देव ! इदं जलम् ।

राजा—( जलमादाय श्येनमभिषिञ्चति स्ववासःपल्लवेन वीजयति )

श्येनः—( चेतनामास्थाय मन्दस्वरम् )

गच्छन्तो न स्थिरतां श्रयन्ति नृपते ! विनाऽशनं प्राणाः

क्षुत्क्षामस्य ममानिलजलसेकप्रमुखरक्षाभिः ॥ ७९ ॥

राजा—( स्वगतम् ) किमद्यापि चिरयति स्थूलपादः ।

( ततः प्रविशति मोदकस्थालहस्तः स्थूलपादः )

विदूषकः—( सिंहासनाधस्तात्सहसैव विनिस्सृत्य तुण्डं परामृशन् ) (क) ही ही जीवदम्हि जीवदम्हि मह खुहाजलणजलन्तपिट्टस्स तत्तिनिमित्तं जेव थूलवाएण मोअगा समाणीदा ( इति जल्पन् स्थूलपादकरान्मोदकस्थालमुद्दालयति )

स्थूलपादः—( विलक्ष एवास्ते । सर्वे हसन्ति )

राजा—( विहस्य ) वयस्य !,

द्विजातिभावादुल्लासिलौल्यलोभितलोचनः ।

मा त्वमन्यायिचिरटखेटपाटवमाचर ॥ ८० ॥

विदूषकः—( रुदन्निव सगद्गदम् ) ( ख ) महाराय ! अज्ज अकारणकुविआए बंभणीए गलहत्थिअ घराउ नीहारिदम्हि ।

---

( क ) ही ही जीवितोऽस्मि जीवितोऽस्मि मम क्षुधाज्वलनज्वलत्पेटस्य तृप्तिनिमित्तं एव स्थूलपादेन मोदकाः समानिताः ।

( ख ) महाराज ! अद्य अकारणकुपितया ब्राह्मण्या गलहस्तयित्वा गृहान्निःसारितोऽस्मि ।

**राजा**—( विहस्य ) वयस्य ! उपलक्षितोऽसि मोदकानेवादातुमवमुपक्रमविक्रमः । भवतु, तवापि दीयन्ते लड्डाः । तावदर्वागुपानय मोदकस्थालम् ।

**विदूषकः**—(क) एवं भोदु । अम्हेहिं तुह भणिअं करेअव्वमवस्सं जेव । ( इत्यभिधाय स्ववासःक्रोडे मोदकान्निक्षिप्य राज्ञे केवलं स्थालं समर्पयति । सर्वे पटान्तेन मुखं पिधाय हसन्ति )

**राजा**—( सवैलक्ष्यम् ) मा द्विजाते ! विजातित्वमाचर । म्रियतेऽसौ बुभुक्षया वराकः श्येनपक्षी । अनवसरोऽयमधुना हास्यरहस्यस्य ।

**विदूषकः**—( स्वोदरं निम्नीकृत्य ) (ख) महाराय ! पिच्छ पिच्छ खुहाखुहिउअरो अहमवि मरामि ।

**राजा**—( स्वगतम् ) अयं शापविद्धोऽपि विजातिरेव द्विजातिः निर्घृण एव । न गृह्यते परपीडया । किमधुना वचनक्रीडया । ( प्रकाशम् ) वयस्य ! तथाप्येकमुपनय मोदकम् ।

**विदूषकः**—( तथा करोति । )

**राजा**—स्वहस्तेन मोदकमुपढौकति श्येनाय ।

**श्येनः**—( मोदकमाघ्राय उन्मुखः सोपहासम् ) उदारशिरोमणे महाराज ! किमेतत् ।

**राजा**—मोदक एषः ।

**श्येनः**—नामाप्यश्रुतपूर्वम् । मोदक इति कः शब्दार्थः ।

---

(क) एवं भवतु । अस्माभिः तव भणितं कर्त्तव्यमवश्यमेव ।

(ख) महाराज ! पश्य पश्य क्षुधाक्षुभितोदरोऽहमपि म्रिये ।

**राजा**—मोदयत्यानन्दयति बुभुक्षातुरमिति मोदकः ।

**श्येनः**—विनाऽस्मद्विधान् जन्तून्, अस्मद्विधा यतः पलादाः ।

तथाहि—

तुष्टिं ममैति न मनो बहुनापि राजन् !
भोज्यान्तरेण भुवनाभयदानशौण्ड ! ।
सद्यः स्वयं शमितजीवितजीवकाया—
दुष्णोष्णमांसशकलानि यतोऽहमद्मि ॥ ८१ ॥

( नेपथ्ये )

सुखाय माध्यन्दिनी सन्ध्या देवस्य । संप्रति हि—

मध्याह्नक्रूरसूरद्युतिविततिपतत्तुङ्गमातङ्गरङ्ग—
च्छुण्डादण्डाग्रजाग्रज्जलजटिलजटाशालिपालिद्रुमालिः ।
राजत्यम्भोजराजीमधुरमधुरसोद्भूतसौरभ्यलुभ्य—
द्भृङ्गीसङ्गीतपीतव्यथपथिकघटाहृद्यदेशो ह्रदौघः ॥ ८२ ॥

अपि च—

तरुणतरणितेजस्तापितायामिलायां
पथि पथि पथिकानामङ्गनाः संचरन्त्यः ।
विदधति कुतुकं नस्तालशिक्षां विनापि
प्रचुरचरणचारी ताण्डवाडम्बरेण ॥ ८३ ॥

अपि च—

किरणदशशतारचारुसूर—
स्फुरदुरुनाभिविभूषितान्तरालम् ।

वियदखिलहरिद्वितानधारं

तुलयति चक्रमयं त्वदीयमस्त्रम् ॥ ८४ ॥

**मन्त्री**—( श्रुतिममिनीय सहर्षमात्मगतम् ) साधु साधु भो मागध ! साधु, अपूर्वमर्थं श्रावितवानसि । ( प्रकाशम् ) देव ! मध्याह्नसन्ध्याविधिसमयो वर्त्तते ।

**श्येनः**—( सकोपम् ) मुखसमायातकवलोद्दालनकन्दलितकालविलम्बेन पीड्यमानोऽस्मि । प्रीणय मां झगिति मांसभक्षिणम् ।

**राजा**—( इति कर्त्तव्यतामूढश्चिन्ताचक्राधिरूढः स्वगतम् । ) अहो ! कार्यवैषम्यमुपस्थितम् ।

श्येनो मांसमृते न तृप्यतितरां क्षुत्क्षामकुक्षिस्तथा

रक्ष्यः प्रेतपतेरपि स्वयमयं पारापतः संप्रति ।

( पुनः समीमांसम् )

किञ्चान्यत्पलविक्रयापणपशुक्रव्यप्रदानेऽपि हा !

दोषः स्यात्

( पुनः सरोमाञ्चम् )

निजमेव तत्पलमहं श्येनाय संढौकये ॥ ८५ ॥

( प्रकाशम् ) वयस्य ! हंहो !,

तुभ्यं श्येन ! ददे पारापातेन तुलितं पलम् ।

निजमेवाधुना तेन सुहितीभव मा मृथाः ॥ ८६ ॥

**श्येनः**—( स्वगतम् ) अहो ! जयतीशानेन्द्रभाषितम् । अहो ! महीपतेः साहसातिरेकः । ( प्रकाशम् ) महाराज ! एवमस्तु ।

**राजा**—( सहर्षं सरोमाञ्चम् ) कोऽत्र भोः ! नेपथ्यान्तः ।

**पुमान्**—एषोऽहमस्ति । आदिशतु देवः ।

**राजा**—अरे तुलामानीयात्र भारपट्टकटके बधान ।

( प्रविश्य पुरुषस्तथाकरोति )

**राजा**—( पुनः ससंभ्रमम् ) कृपाणी भोः ! कृपाणी ।

( प्रविश्य )

**पुरुषः**—( राज्ञे कृपाणीमर्पयति )

**राजा**—( करेण कृपाणीमादाय प्रोल्लासयति )

**विदूषकः**—( सभयमिव दरस्फुरितचक्षुरप्राप्तपूर्वानिमान् मोदकान् कवलयन् निष्क्रान्तः । सर्वेऽपि स्मयन्ते )

**राजा**—( पारापतमेकस्मिंश्चैलके निधाय क्षुरिकया कूष्माण्डनिर्विशेषां स्वजङ्घां छेत्तुमारभते )

**मन्त्री**—( ससंभ्रममुत्थाय साश्रुदृग् राजानं प्रति बाहौ विधृत्य )

एकस्यैव विहङ्गस्य कृते सुकृतीनांवर ! ।
किमिदं स्थानकं विश्वाधारस्य वपुषो व्यये ॥ ८७ ॥

**राजा**—

इह कीर्त्तिः परत्र स्वःसुखस्फूर्त्तिश्च यत्फले ।
तस्याः स्थानकमेतद्धि परोपकृतिवीरुधः ॥ ८८ ॥

**मन्त्री**—देव क्षत्रियकुलकमलबान्धव ! जगद्दृशां भवादृशां नायुक्तिर्युक्तिरेव क्रियते परोपकृतिः । परम्—

किमपि स्फुटमेव दैवतं कपटं देव ! विचार्यतामदः ।
अपि नाम विहङ्गमाविमौ लपतः क्वापि मनुष्यभाषया॥८९॥

**राजा**—( सावहेलम् )

इदं दैवमदैवं वा कपटं मम तेन किम् ।
स्वप्रतिज्ञाम्बुधेः पारमपारस्य प्रयास्यतः ॥ ९० ॥

अपि च—

अग्राह्यनामधेयस्य तस्य स्तादजनिर्जने ।
स्वयमेव प्रतिज्ञाय यः पश्चादवसीदति ॥ ९१ ॥

( पुनः सरोमाञ्चम् )

अद्य मे फलितं प्राच्यपुण्यवल्लीभिरद्य मे ।
सफलं जन्म चाद्याहं जातपुण्याहमङ्गलः ॥ ९२ ॥

( इति कृपाणीपाणिः प्रनृत्यति )

( नेपथ्ये )

( क ) इदो इदो देवी ।

मन्त्री—( श्रुतिमभिनीय ) कथमहो ! वेत्रधारिण्या धारिण्या निर्दिश्यमानसरणिर्देवी लक्ष्मीवती समेति ।

( ततः प्रविशति प्रियंवदादत्तहस्तावलम्बा देवी )

देवी—( ख ) हला पियंवए ! तदो तदो ।

प्रियंवदा—

(ग) जत्थ पइं महुरवाणि ! मुसिआ परपुट्ठालहरिणीहि वाणीहि ।
सहयारपायवाणं पुरओ बुंबु व्व पाडेइ ॥ ९३ ॥

---

(क) इत इतो देवी ।

(ख) हले प्रियंवदे ! ततस्ततः ।

(ग) यत्र त्वया मधुरवाणि ! मुषिता परपुष्टा आलहारिणीभिर्वाणीभिः ।
सहकारपादपानां पुरतः पूत्कार इव पातयति ॥

**देवी**—( सलज्जस्मितम् ) (क) तदो तदो।

**प्रियंवदा**—(ख) तत्थ उज्जाणे वसन्तूसवकीलननिमित्तं गएण पहुणा पुव्वभववेरी विज्जुदाढो नाम असुरशिरोमणी नाणाविहझुज्झेहिं पराजिउ अणंगतेरसीदिणंमि सामिणीएऽवि पच्चक्खं।

**देवी**—( सरोमाञ्चम् ) (ग) अध कधय।

**प्रियंवदा**—(घ) सामिणि ! अज्ज अवरं किं पि मए सुदं।

**देवी**—( ससंभ्रमम् ) (ङ) सावहाणाम्हि, कहेहि तं मए जं तए सुदं।

**प्रियंवदा**—(च) चउद्दसीपमुहधम्मतिहीसु धम्मसालाए ठिओ सामी किं पि झएदि। एवं जाणादि सामिणी।

**देवी**—( सस्मितम् ) (छ) सव्वलोअपसिद्धं खु एदं। विसेसं कहेहि।

---

(क) ततस्ततः।

(ख) तत्रोद्याने वसन्तोत्सवक्रीडननिमित्तं गतेन प्रभुणा पूर्वभववैरी विद्युद्दंष्ट्रो नामासुरशिरोमणिर्नानाविधयुद्धैः पराजितोऽनङ्गत्रयोदशीदिने स्वामिन्या अपि प्रत्यक्षम्।

(ग) अथ कथय।

(घ) स्वामिनि ! अद्यापरं किमपि मया श्रुतम्।

(ङ) सावधानास्मि कथय तन्मां यत्त्वया श्रुतम्।

(च) चतुर्दशीप्रमुखधर्मतिथिषु धर्मशालायां स्थितः स्वामी किमपि ध्यायति एवं जानाति स्वामिनी।

(छ) सर्वलोकप्रसिद्धं खलु इदम्। विशेषं कथय।

प्रियंवदा—(क) चतुद्दसीनिसाए असुरजुज्झोवज्जिअपावस्स सोहिं कातुं धम्मसालाए सामी विसेसझाणपरो संजाओ ।

देवी—(ख) तदो तदो ।

प्रियंवदा—(ग) तत्थ ट्ठियस्स सामिणो मणोवेगेण गयणंगणाओ ओअरिअ भयभरिअमाणसो कंपमाणसव्वंगो संकोचिअखंधबंधो ताएहि मं ताएहि मं ति मनुस्सभासाए भासमाणो एगो पारेवओ तिहुअणिक्कसरणं चरणमूलमल्लीणो ।

देवी—(घ) अहो ! कंदलिदभयकउहल्लो कधालसो । तदो तदो ।

प्रियंवदा—(ङ) तओ गरुड व्व भुयंगमस्स तस्स मग्गाणुसारी खुहाकरालकुक्खी अणवट्ठिअक्खी मम भक्खमप्पेहि अप्पेहि त्ति भासंतो एगो सेणपक्खी समागउ त्ति कमेलयमुहमुहादो मए सुदं । अउ वरं किं पि भविस्सदि त्ति न याणामि ।

---

(क) चतुर्दशीनिशायामसुरयुद्धोपार्जितपापस्य शोधिं कर्तुं धर्मशालायां स्वामी विशेषध्यानपरः संजातः ।

(ख) ततस्ततः ।

(ग) तत्र स्थितस्य स्वामिनो मनोवेगेन गगनाङ्गणतोऽवतीर्य भयभरितमानसः कम्पमानसर्वाङ्गः संकोचितस्कन्धबन्धस्त्रायस्व मां त्रायस्व मामिति मनुष्यभाषया भाषमाण एकः पारापतस्त्रिभुवनैकशरणं चरणमूलमालीनः ।

(घ) अहो ! कन्दलितभयकुतूहलः कथारसः । ततस्ततः ।

(ङ) ततो गरुड इव भुजङ्गमस्य तस्य मार्गानुसारी क्षुधाकरालकुक्षी अनवस्थिताक्षी मम भक्ष्यमर्पयार्पयेति भाषमाण एकः श्येनपक्षी समागत इति क्रमेलकमुखमुखतो मया श्रुतम् । अतः परं किमपि भविष्यतीति न जानामि ।

३

**देवी**—(क्षणमिव ध्यात्वा) (क) पिअंवए ! हुंतेऽवि वहुंमि पलायणठाणे जं अणेगलोगसंकुले रायकुले आगच्छिअ सो पारेवओ अज्जउत्तस्स पायमूलमल्लीणो तं न मे सरूवं पडिहादि। किञ्च असुदपुव्वं खु एदं जं सउणावि पुरिसभासाए भासंति।

**प्रियंवदा**—(ख) देवि ! जुत्तं भणसि, जं ममावि मणो विआरवाउलं वट्टदि। जओ—

(ग) सच्चत्तेण कमेण सेणभयओ पारावओ आगओ
सं रूवं परिवत्तिऊण किमयं विज्जाहरो वट्टदि।
किं वा सत्तपरीक्खणाय पहुणो सग्गा समुत्तिण्णओ
देवो कोऽवि भवे मयच्छि ! इअ णो सम्मं वियाणीयदि॥९४॥

**देवी**—(दक्षिणाक्षिस्फुरणमभिनीय साकुलं परिक्रामति)

**मन्त्री**—(सहसोपसृत्य कलहंसकलकण्ठाभ्यां सह) स्वामिनि ! निर्भाग्यशेखरस्त्वामेष पुरुषोत्तमः प्रणमति।

---

(क) प्रियंवदे ! भवत्यपि वहुनि पलायनस्थाने यदनेकलोकसंकुले राजकुले आगत्य स पारापत आर्यपुत्रस्य पादमूलमालीनः। तन्न मे सरूपं प्रतिभाति। किञ्च अश्रुतपूर्वं खल्विदं यच्छकुना अपि पुरुषभाषया भाषन्ते।

(ख) देवि ! युक्तं भणसि यन्ममापि मनो विचारव्याकुलं वर्त्तते। यतः—

(ग) सत्यत्वेन क्रमेण श्येनभयतः पारापत आगतः
स्वं रूपं परिवर्त्त्य किमयं विद्याधरो वर्त्तते।
किं वा सत्त्वपरीक्षणाय प्रभोः स्वर्गात्समुत्तीर्णकः
देवः कोऽपि भवेन्मृगाक्षि ! इति नो सम्यग् विज्ञायते॥

**देवी**—( साक्षेपम् ) ( क ) मंतिराय ! पडिहदममंगलं किमेदं जंपीयदि ।

**मन्त्री**—देवि ! पश्य पश्य स्वामिनः परोपकारव्यसनग्रहिलस्य चेष्टितम् ।

**राजा**—( सप्रमोदम् ) करेणैकेन जङ्घापलपिण्डमाकृष्य क्षुरिकया कृन्तति ।

**देवी**—( सबाष्पम् ) (ख) अमच्च! कोयमम्हाणमकण्डे वज्जनिवाओ।

**अमात्यः**—स्वामिनि !,

यामिभी भाविनी लोके तज्जानीहि विपन्मयी ।
यदपाकुर्वते भूपा मन्त्रिमन्त्रमयं महः ॥ ९५ ॥

( राजानं प्रति सव्यथम् )

हाहाहहा ! कनकभङ्गपिशङ्गमङ्ग-
मङ्ग स्मराङ्गसुभगं नृप ! कृत्यते किम् ।
अन्यानि किं नहि पलापणभूमिकायां
भिन्दन्ति हन्त ! शकुनेः क्षुधमामिषाणि ॥ ९६ ॥

**देवी**—( सगद्गदम् )

(ग) अहह ! किमङ्गं चङ्गं कप्पिज्जइ अज्जउत्त ! छुरिआए ।
जं विन्नवेदि मंती तं कीरसु नन्नहा नाह ! ॥ ९७ ॥

---

(क) मन्त्रिराज ! प्रतिहतममङ्गलं किमिदं कथ्यते ।
(ख) अमात्य ! कोऽयमस्माकमकाण्डे वज्रनिपातः ।
(ग) अहह किमङ्गं चङ्गं कर्त्यते आर्यपुत्र ! क्षुरिकया ।
यद्विज्ञपयति मन्त्री तत्क्रियतां नान्यथा नाथ ! ॥

**राजा**—( सहासम् ) देवि !,

यायावरेण किमनेन शरीरकेण
स्वेच्छान्नपानपरिपोषणपीवरेण ।
सर्वाशुचिप्रणयिना कृतनाशनेन
कार्यं परोपकृतये नहि कल्प्यते यत् ॥ ९८ ॥

( इति ब्रुवन् स्वजानुजङ्घायुगलमुत्कृत्योत्कृत्य मांसखण्डानि तुलायामारोपयति )

**कलहंसः**—( सबाष्पम् ) वयस्य कलकण्ठ ! पश्य,

मायादोषजुषामधोगतिरितीवाख्याति साक्षादधो-
गच्छच्चेलकमण्डजस्य सहसा तद्भारसंभारतः ।
भाराक्रष्टमुदश्चदेतदपि च क्रव्याकुलं चेलकं
गन्तोच्चैःपदमेष भूपतिरितीवान्तःसभं शंसति ॥९९॥

**मन्त्री**—( सवैलक्ष्यमाकाशे लक्ष्यमालक्ष्य )

अपि घनतरमस्य क्ष्माभुजः सत्त्वभाज-
स्तुलयति पलमेनं छद्मपारापतं न ।
अवगणयति युक्तिं मामकीमेष पृथ्वी-
पतिरपि भविता हाहा किमेतत्किमेतत् ॥ १०० ॥

**राजा**—( सहर्षमात्मगतम् )

तुलयति पलभारः सर्वथा चेन्न पारा-
पतमभिमतमेतद्वर्त्तते तन्ममैव ।
यदुपकृतिमहेऽस्मिन् रंहसेदं विनाशि
व्ययितमहह नाङ्गं तद्व्ययिष्यामि कर्हि ॥ १०१ ॥

**राजा**—( इति जल्पन् शस्त्रिकामपास्य स्वयमेव तुलामारोहति )

**अमात्यादयः सर्वेऽपि**—(सौत्सुक्यं मनोविलाध्यासितस्वामिदन्दशूकनिः-शङ्कफुङ्कारववशोल्लसद्गरलोदककणसोदरवाष्पोदविन्दुसन्दोहसूत्रितासूत्रहारविराजित-क्षसः प्रणम्य राजानं प्रति )

वपुषार्त्तिमुषामुना त्वया त्रातव्या सकलापि मेदिनी ।
सहसैव पतत्रिणः कृते त्यजसीदं नरनाथ ! तत्कथम् ॥१०२॥

अपि च—

अधिरूढेऽद्य कृते पतत्रिणोऽप्यवनीपाल! तुलामिमां त्वयि ।
अधिरोहतु कस्तुलामिलारक्षायै पुरुषस्तवापरः ॥ १०३ ॥

**देवी**—( सदैन्यं राज्ञः पादौ शिरसिकृत्य ) (क) हा अज्जउत्त ! हा तिहुअणिक्कमल्ल ! हा रिउरायहियियसल्ल ! हा कणयसिलायलपिहुलव-त्थत्थल ! हा करिकरघोरसरलभुयजुयल ! हा पडिपुण्णपुण्णिमाचन्दव-यण ! हा रूवरेहावहत्थिअमयण ! हा देवसुन्दरीण वि दुल्लह ! हा हिअयवल्लह ! परोवयारतजिअसरीर ! वीर ! कत्थवि दट्ठव्वोऽसि मए मंदभाइणीए ( इति प्रलपन्ती मूर्छति ) ।

**प्रियंवदाधारिण्यौ**—( सफूत्कारं चन्दनव्यजनादिभिराश्वासयतः )
( आकाशे )

दिव्यातोद्यनादकरम्बितः सर्वतोऽपि जय जय ध्वनिः, पुनस्तत्रैव कटकटश्च ।

---

(क) हा आर्यपुत्र ! हा त्रिभुवनैकमल्ल ! हा रिपुराजहृदयशल्य ! हा कनक-शिलातलपृथुलवक्षस्थल ! हा करिकरघोरसरलभुजयुगल ! हा परिपूर्णपूर्णिमाच-न्द्रवदन ! हा रूपरेखावहस्तितमदन ! हा देवसुन्दरीणामपि दुर्लभ ! हा हृदय-वल्लभ ! परोपकारत्यक्तशरीर ! वीर ! कुत्रापि द्रष्टव्योऽसि मया मन्दभागिन्या ।

अङ्गीकृत्यात्मनो दुःखं सुखयत्यपरान् महान् ।
आतपादातपस्थोऽयं पथिकानवति द्रुमः ॥ १०४ ॥

द्वितीयः—

सुव्रतः सुगुणः सोढा परार्थेऽनर्थमात्मनि ।
अन्तर्भूय स्फुरत्स्फारघातादवति देहिनम् ॥ १०५ ॥

राजा—( परोपकृतिध्यानपर एवास्ते । अपरे संभ्रमं नाटयन्ति )

मन्त्री—( नभस्तलमालोक्य ) अये !,

दिवौकसामङ्कनिषण्णवल्लभा-
स्तनस्थहस्ताम्बुरुहां सकौतुकम् ।
मार्त्तण्डमालाभिरिवैतदम्बरं
विमानसेनाभिरलङ्कृतं किमु ॥ १०६ ॥

इमौ च हाराद्धहारस्फारकेयूरकर्णपूरमुकुटकटकतिलककुण्डलाभरणघोरणीभिर्भ्रकृतरोदसीकौ मिथः किंवदन्तीपरौ पुरः सुराविवावतरतः । ततः क्षितिपतिशिरसि पुष्पवृष्टिं कुर्वाणौ जय जय राजन्निति व्याकुर्वाणौ सुपर्वाणौ किंकुर्वाणाविव प्रविश्य राज्ञः पुरस्तादुपविशतः ।

राजा—( उन्मील्य चक्षुषी सिंहासनस्थः सविस्मयं पुरोऽवलोक्य च स्वगतम् )

क तौ शकुन्तौ क च सा पलाकुला
तुला कलाभिः कलिताविमौ च कौ ।
( आत्मानमालोक्य च )
बीभत्सतागेहमिदं च देह-
महो ! कथं मे रुचिरं बभूव ॥ १०७ ॥

ततः—

स्वप्नः किं मनसो श्रमः किमथवा दोषोदयश्चक्षुषो-
रासीदस्ति किमिन्द्रजालमथवा जन्मान्तरं मेऽभवत् ।
पाताले दिवि वान्तरिक्षभुवि वा द्वीपान्तरे चाथवा
कोऽहं कास्मि किमत्र चास्मि विदधत्कर्मप्रकारश्च कः॥१०८॥

**सुरौ**—( घटितकरसंपुटविराजमानोत्तमाङ्गभागौ )

नरेन्द्र ! प्रतिपच्चन्द्रनिष्कलङ्ककलामय ! ।
स्मेरचेताः कथं चिन्ताचितामेतां प्रपद्यसे ॥ १०९ ॥
अस्माकमधुना कस्मादखर्वं सर्वमप्यदः ।
श्रूयतां विस्मयातङ्कवेष्टितं बत चेष्टितम् ॥ ११० ॥

( सर्वे सावधाना भवन्ति )

**सुरौ**—

अद्य सिंहासनासीनः श्रीमानीशानवासवः ।
विस्मितः सस्मितं पर्षत्प्रत्यक्षमिदमब्रवीत् ॥ १११ ॥

**राजा**—( सकौतुकं ) किं तत् ।

**सुरौ**—इदम्,

सेन्द्रैरपि सुरैः संप्रत्यक्षोभ्यमहिमा भुवि ।
शरण्यः सकृपो वज्रायुधादस्त्येव नापरः ॥ ११२ ॥

**राजा**—( सलज्जमधोमुखीभवति । अपरे रोमाञ्चमुद्वहन्ति । )

**मन्त्री**—( सहर्षं ससंभ्रमम् ) ततस्ततः ।

**सुरौ**—( तदेतदाकर्ण्य सुराः सोत्प्रासमिदं प्रवदन्ते स्म । )

वसति मनुजमात्रं कोऽप्यहो ! सप्तधातु-
स्थगितवपुरिलायां मांसदृग् धान्यकीट ।

सहरिभिरपि दैवैः पात्यते नो स सत्त्वा-
दिति वदति विभुर्नः पूतरे स्वामिधर्मः ॥ ११३॥

**मन्त्री**—ततस्ततः।

**सुरौ**—

असह्यमविषह्य स्वस्वामिनोऽपि वचस्ततः।
उत्थाय च सदस्युच्चैरावाभ्यामिति भाषितम् ॥ ११४ ॥

तथा च—

देव ! स्वामितया यूयं प्रजल्पत यथा तथा।
किन्त्वावां क्षोभयिष्यावः सत्त्वात्तं नरकीटकम् ॥ ११५ ॥

अथ च—

शक्रोऽप्युवाच सक्रोधं युवां यातमरे ! जवात्।
ध्रुवं ध्रुवः पतेद्व्योम्नः सत्त्वात्स तु न कर्हिचित् ॥ ११६ ॥

**मन्त्री**—( सानन्दम् ) ततस्ततः।

**सुरौ**—ततश्च,

एतावावां क्षोभयावः क्षमायां गत्वा सत्त्वात्तं प्रतिज्ञाय चेति।

( राजानं बाहौ विधृत्य )

सत्त्वस्योच्चैस्ते विधातुं परीक्षामत्रायातौ भूप ! भूत्वा शकुन्तौ॥११७॥

इदं च—

संप्रत्यपारं गुरुसत्त्वसत्त्वं मायाविहङ्गौ भवतः परीक्ष्य।
विहङ्गतां तां च विमुच्य देवरूपाविमौ देव ! बभूविवावाम् ॥११८॥

अपरं च—

किं भूयसा भुवनभूषण ! भूतलेऽस्मि-
न्नेकस्त्वमस्य भयदः शरणागतानाम्।

( सविनयमञ्जलिं बद्ध्वा )

क्षन्तव्यमेव नरदेव ! तदेतदस्म-
दुश्चेष्टितं कृतधियो हि न कोपवन्तः ॥ ११९ ॥

**राजा**—( विहस्य ) देवौ ! नैतदुच्यते । यतः तत्रभवद्भ्यां सत्त्वपरीक्षामिषेणाहमनुगृहीतोऽस्मि ।

**सुरौ**—राजन् ! तवानुग्रहकर्त्ता भगवानेव तीर्थभर्त्ता, कावावाम् । परं देव ! श्रूयतां मुहूर्त्तमेकमावयोर्वचः । तथाहि—

फुल्लत्कैरवभैरवाट्टहसितश्वेतं त्वदीयं यशः
श्रुत्वा संसदि गीयमानमनिशं हाहादिभिर्गायनैः ।
धारावाहिभिरश्रुभिः प्रमुदितस्तद्यन्त्रधारागृह-
क्रीडाकौतुकमातनोति सुचिरं शच्याः सहस्रेक्षणः॥१२०॥

अपि च—

दिग्दन्तावलकर्णतालमितिभिस्ते कीर्त्तिरङ्गाङ्गना
नृत्यन्ती श्रममागतेव जगतीविस्तीर्णरङ्गाङ्गणे ।
म्लानं माल्यमिवाक्षिपन्मृगधरं धम्मिल्लकोशादुडू-
न्यादाय स्वनखैर्ल्ललाटतटतः खेदोदबिन्दूनिव ॥ १२१ ॥

अपि च—

त्वं न्यायी भुवनावतंस ! भवतः कीर्त्तिस्तु किं कथ्यते
बद्ध्वा वासरुचिं सुरालयमधि क्षीवत्वमाविभ्रती ।
आकाशे विलुलोठ यत्तदपतद्गङ्गानिभादंशुकं
तस्या ऋक्षमिषाच्च हारमणयस्ताटङ्कमिन्दुच्छलात् ॥१२२॥

किञ्च—

दिग्दन्तावलगल्लपल्वलगलद्दानाम्बुभिः पङ्किले
क्रीडित्वा तव कीर्त्तिरत्र रिपुभुग्दोर्दण्डदिग्मण्डले ।
न्यस्यन्ती यदमुष्य वक्षसि रयाद्धामागमत्रैदशं
धत्ते तत्पदमेकमङ्कमिषतः पङ्काकुलं चन्द्रमाः ॥ १२३ ॥

राजा—( सलज्जास्मितम् ) देवौ ! कथमित्थमवितथमिव मामल्पकमप्यनल्पं युवामुपश्लोकयतः ।

सुरौ—( राजानं दोःस्तम्भेन परामृशन्तौ विहस्य )

सप्ताम्भोधितटीपटीरपटलच्छायानिषण्णोरगी—
गीतस्फीतगुण ! क्षितीश्वर ! जडावस्मादृशौ कीदृशौ ।
उच्छ्वस्य प्रमदाश्रुपूर्णनयनः श्लाघां शरण्येषु ते
तामीशानसुराधिपोऽप्यधिसभं गृह्णाति धुन्वन् शिरः॥१२४॥

राजा—( विहस्य ) देवौ ! भगवानीशानवासवोऽनन्यसामान्यधर्मचेता ममालीकगुणस्यापि श्लाघामातनोति । तथाहि—

सज्जनाः परमस्तोकं स्तोकमप्यालपन्ति हि ।
कवयः कवयन्त्यब्धिं क्षारमप्यमृताकरम् ॥ १२५ ॥

सुरौ—राजन् ! यद्भवतोक्तं तद्युक्तम् । परं नहि निर्मूला प्रसिद्धिः स्यादेव ।

राजा—( विहस्य ) स्यादेव । तथाहि—

कीर्त्तिः स्फूर्त्तिरलीकापि केषाञ्चिदिह वर्त्तते ।
कीटः खद्योततां धत्ते कोऽपि श्रीफलतां तरुः ॥१२६॥

सुरौ—( सहासम् ) राजन् ! महात्मासि, लज्जसे निजप्रशंसया,

न पराजीयसेऽप्युत्तरोत्तराभिर्वचनरचनाभिः । यतः—

वीक्ष्य वक्षसि सानन्दामिन्दिरां कृतमन्दिराम् ।
स्पर्द्धयेव मुखाम्भोजं भेजे तव सरस्वती ॥ १२७ ॥

परं देव ! किंबहुना—

जितकर्पूरकुन्देन्दु को विदामास कोविदः ।
तव विस्मापितेशानाखण्डलं गुणमण्डलम् ॥ १२८ ॥

**राजा**—( लज्जया शीतेनेव संकुचति । अमात्यादयः पुत्रजन्मोत्सवमिव तदाकर्ण्य प्रहृष्यन्ति । )

( नेपथ्ये वैतालिकौ )

**प्रथमः**—.............................................

**द्वितियः**—

सकलजगदपूर्वां तावकीं जीवितेना-
प्युपकृतिकृतिमेतामर्थिषु प्रेक्ष्य देव ! ।
कुतुककलितचेता रंहसोत्क्षिप्तपादः
प्रथयितुमिव पूषा पांशुपाणिर्जगाम ॥ १२९ ॥

**प्रथमः**—

मग्ने लग्नघटीपटीयसि रवौ पातालकुण्डीजले
वेलावर्द्धितवार्द्धिमर्दलवुमत्कारे परिस्फूर्जति ।
गायन्तीपु दिगङ्गनासु विहगश्रेणीरवेण श्रियं
चन्द्रः सांप्रतमुद्वहत्युदयजामुल्लासिनव्यांशुकः ॥ १३० ॥

**द्वितियः**—

नभसि यदुदयन्ते तारकास्तत्प्रतीम-
स्त्रिभुवनमपि जेतुं पुष्पबाणः स्वबाणान् ।

विकिरति विधुचापं कुण्डलीकृत्य लक्ष्म्या–
यसकवचविपञ्चीदृश्यमूर्त्तिस्तदन्तः ॥ १३१ ॥

**प्रथमः**—

त्रिभुवनवनक्रीडाखेदच्छिदे नियतं विधौ
सरसि सहसा कामः कुम्भी ममज्ज किमन्यथा ।
मदमधुकरच्छायामङ्कः स्पृशत्युडुसंहतिः
श्रयति परितो झम्पापातोद्गतोदकणश्रियम् ॥ १३२ ॥

**द्वितीयः**—

दिग्वृद्धिप्रचयाद्दतेऽम्बरखले ज्योतिस्सुमैरञ्चिते
पश्य त्वं नृप ! संप्रति प्रतिभटे नंष्ट्वा गते भास्वति ।
चन्द्रः सान्द्रमहा महाभट इहाभिज्ञानदम्भादयं
बिभ्राणः क्षुरिकां स्फुरत्क्रमगतिर्जेता नरीनृत्यते ॥१३३॥

**राजा**—( श्रुतिमभिनीय सप्रसादं मन्त्रिणं प्रति ) अमात्य ! एताभ्यां मागधाभ्यां भवता सुवर्णतुलाऽयुतमेकं प्रदेयम् ।

**मन्त्री**—( सत्वरमञ्जलिं बद्ध्वा ) आदेशः प्रमाणम् ।

**राजा**—( सप्रणयं देवीं प्रति ) देवि ! त्वमपि शुद्धान्तमधितिष्ठ ।

**राजा**—( सुरौ प्रति सादरम् ) देवौ ! निजचरणतामरसैरवतंसयन्तु दिवं तत्रभवन्तो भवन्तः । वयमपि सन्ध्याविधिमनुतिष्ठामः ।

**सुरौ**—( सप्रश्रयम् ) महाराज ! अमोघं हि देवदर्शनम्, वरं वृणु वरं वृणु, भवतः किमावामुपकुर्वः ।

**राजा**—देवौ ! निजधर्मपरायणः सर्वथैव कृतकृत्योऽस्मि । विशेषेण पुनरद्य किमुच्यते—

ईशानेन्द्रवचः प्रमाणपदवीमध्यारुरोहाऽभवं
संख्यापूरणमात्तरक्षणधियामद्याहमस्मिन् कुले ।
ईदृक्कौतुकवीक्षणेन जहृषुः स्ववासिनः सांप्रतं
किञ्चानेन मिषेण दुर्लभमपीदं वोऽभवद्दर्शनम् ॥१३४॥

**सुरौ**—( सरोमाञ्चम् ) देव ! तथापीदमस्तु—
श्रेयोऽतुच्छं जगत्सु प्रसरतु विपदः प्रक्षयं यान्तु सर्वाः
पर्वालीभिर्भवन्तु प्रमुदितमनसः सन्ततं हन्त सन्तः ।
सन्तु ध्वस्तत्रिलोकीवृजिनजिनपदाम्भोजभक्तेर्विशोका
लोकाः स्वस्त्यस्तु तुभ्यं रिपुकमलकलाबालचन्द्र ! क्षितीन्द्र! ॥१३५॥

**। इति श्रीबालचन्द्रकवीन्द्रेण विरचितं श्रीकरुणा-
वज्रायुधनाम नाटकं समाप्तम् ।**

---

भद्रश्रीहरिभद्रसूरिसुगुरोः षट्तर्कविद्याविदः
शिष्यः श्रीश्रुतदेवतासुत इति ख्यातः प्रबन्धं व्यधात् ।
श्रीवज्रायुधचक्रवर्त्तिचरितव्याहारवैतालिकम् ।
विद्वत्कर्णरसारसायनममुं श्रीबालचन्द्रः कविः ॥ १ ॥

येऽमुं वीक्ष्यमुदं वहन्ति सुहृदस्ते सन्तु दीर्घायुषो
ये तु द्वेषमसज्जनास्तदथवाऽलप्यालमग्रेतनम् ।
अस्तु स्वस्ति जगत्त्रयेऽपि जनता प्रीतिं मिथः प्राप्नुया-
दाचन्द्रार्कममूर्जयन्तु च परा वाचः कवीनामपि ॥

---

# करुणावज्रायुधस्थपद्यानामनुक्रमणी ।

## संस्कृत, हिंदी अने गुजरातीना उ पुस्तको ।



१ कुवलयमाला ( संस्कृत )

२ विज्ञप्तित्रिवेणी ( संस्कृत-हिन्दी )

३ कृपारसकोश ( ,, )

४ शत्रुंजयतीर्थोद्धारप्रबन्ध ( ,, )

५ [illegible] के संघ का इतिहास ( हिन्दी )

६ [illegible] चरित्र ( संस्कृत [illegible]न्दी )

७ [illegible] प्रबंध ( [illegible] )

८ [illegible]क-प्रबंधो ( [illegible]राती )

९ [illegible] जैनलेखसंग्रह ( [illegible]कृत-गुजराती )

१० कौमुदीमित्राणन्दम् ( [illegible] )

११ मोहपराजयः ( संस्कृत )

१२ प्रबुद्धरौहिणेयम् ( संस्कृत )

आ पुस्तकोमां थी केटलां छपाइ गयां छे अने केटलां छपाय छे.